| | अ. | पा. | सू. |
|---|---|---|---|
| स्मरन्ति च | २ | ३ | ४७ |
| स्मरन्ति च | ३ | १ | १४ |
| स्मरन्ति च | ४ | १ | १० |
| स्मर्यते च | ४ | २ | १३ |
| स्मर्यतेऽपि च लोके | ३ | १ | १९ |
| स्मर्यमाणमनुमानं स्यादिति | १ | २ | २५ |
| स्मृतेश्च | १ | २ | ६ |
| स्मृतेश्च | १ | ३ | २३ |
| स्मृतेश्च | ४ | ३ | १० |
| स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् | २ | १ | १ |
| स्याच्चैकस्य ब्रह्मशब्दवत् | २ | ३ | ५ |
| स्वपक्षदोषाच्च | २ | १ | १० |
| स्वपक्षदोषाच्च | २ | १ | २९ |
| स्वशब्दोन्मानाभ्यां च | २ | ३ | २२ |
| स्वात्मना चोत्तरयोः | २ | ३ | २१ |
| स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः | ३ | ३ | ३ |
| स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि | ४ | ४ | १६ |
| स्वाप्ययात् | १ | १ | ९ |
| स्वामिनः फलश्रुतेरित्यात्रेयः | ३ | ४ | ४४ |
| हस्तादयस्तु स्थितेऽतो नैवम् | २ | ४ | ६ |
| हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् | ३ | ३ | २६ |
| हृद्यपेक्षया तु मनुष्याधिकारत्वात् | १ | ३ | २५ |
| हेयत्वावचनाच्च | १ | १ | ८ |


---0---

श्रीः

# ब्रह्ममीमांसा

## श्रीकण्ठभाष्यसहिता.

ओं नमोऽहंपदार्थाय लोकानां सिद्धिहेतवे।
सच्चिदानन्दरूपाय शिवाय परमात्मने॥ १॥

निजशक्तिभित्तिनिर्मितनिखिलजगज्जालचित्रनिकुरुम्बः।
जयति शिवः परमात्मा सकलागमसारसर्वस्वम्॥ २॥

भवतु स भवतां सिद्ध्यै परमात्मा सर्वमङ्गलोपेतः।
चिदचिन्मयः प्रपञ्चः शेषोऽशेषोऽपि यस्यैषः॥ ३॥

नमश्श्वेताभिधानाय नानागमविधायिने।
कैवल्यकल्पतरवे कल्याणगुरवे नमः॥ ४॥

श्रीमतां व्याससूत्राणां श्रीकण्ठीयः प्रकाशते।
मधुरो भाष्यसन्दर्भो महार्थो नातिविस्तरः॥ ५॥

व्याससूत्रमिदं नेत्रं विदुषां ब्रह्मदर्शने।
पूर्वाचार्यैः कलुषितं श्रीकण्ठेन प्रसाद्यते॥ ६॥

सर्ववेदान्तसारस्य सौरभास्वादमोदिनाम्।
आर्याणां शिवनिष्ठानां भाष्यमेतन्महानिधिः॥ ७॥

इहौपनिषदी मीमांसा समारभ्यते। तदारम्भोत्र किंपुरुषार्थः? पुरुषार्थो हि निरुपाधिकप्रेमाविद्वेषास्पदयोः सुखदुःखयोः प्राप्तिरन्य-

न्तनिवृत्तिर्वा। कश्चेहाधिकारी? यस्यार्थित्वादयो गुणाः। किमस्य विषयः? यत् प्रसिद्धमनतिप्रसिद्धं च सन्देहदोलासमारूढं वर्तते। कस्यानन्तरमस्यारम्भः? यस्य नियतप्रयोजकतया पूर्वभावित्वमवगम्यते। इति श्रोतृजनमनश्शङ्काशूकसमुन्मूलनाय सर्वज्ञशिखामणिना भगवता व्यासेन समवतारितमिदं सूत्रम्—

## अथातो ब्रह्मजिज्ञासा ॥ १ ॥

इदमेकमधिकरणम्। विषयसंशयपूर्वपक्षसिद्धान्तनिर्णयसंगतीनामाधारत्वमिहाधिकरणत्वम्। अत्राथशब्दोयमानन्तर्यार्थः। न तु 'अथ योगानुशासनम्'* इत्यादाविवाधिकारार्थः। अधिकारो हि प्रारम्भः। न खलु ब्रह्मज्ञानेच्छा कर्तव्यत्वेन प्रारम्भयोग्या भवति। सा किल विषयरामणीयकतामात्रसंभाव्या॥

ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ॥

इति स्मृतेरयमथशब्दो न मङ्गलार्थो वर्णनीयः; जिज्ञासायां मङ्गलस्यान्वयासम्भवात्। शास्त्रारम्भे शिष्टाचारपरिपालनार्थं मङ्गलाचरणं तु वर्णध्वनिमात्रेण कल्प्यते। न चायं पक्षान्तरपरिग्रहार्थः; पूर्वमेकस्यानुक्ततया तत्प्रसङ्गाभावात्। न वा भोजनगमनादिवदनियतं यत्किंचित्पूर्ववृत्तमपेक्ष्य अयमथशब्दप्रयोगः, नियतसामग्रीभूतस्य कस्य चिदत्र विवक्षितत्वात्। यस्य संपत्तिरिहाधिकारिविशेषणतया ब्रह्मविचारस्य साधनं तत्पूर्वभावीति विज्ञायते। अथाष्टवर्षत्वादियुक्तब्राह्मणाद्युपयुक्तोपनयनसंस्कारपूर्वकस्य 'स्वाध्यायोऽध्येतव्यः'† इति स्वविधिप्रयुक्ततया नित्यप्राप्तस्य नियमोपासिताचार्यमुखलब्धाक्षरग्रहणरूपस्य अर्थज्ञानफल-

---

*यो. सू. १-१. †तै. आ. २-१५.

स्य वेदाध्ययनस्य ब्रह्मविचारात्पूर्वभावित्वं युक्तम्, धर्मवद्ब्रह्मणोपि वेदैकसिद्धत्वात् अनधीतवेदस्य तद्विचारानुपपत्तेः; अतः केवलाध्ययनानन्तरं ब्रह्मविचारः इति चेत्—भवतु नाम तादृशमध्ययनं; तदनन्तरं तु धर्मविचारः, तस्य तदसिद्धौ सिद्ध्यभावात्। तथा चाचार्यैः प्रतिपादितम् 'अथातो धर्मजिज्ञासा'* इति प्रथमतः उपाध्यायादध्ययनानन्तरं धर्मविचारप्राप्तिरिति विचार उच्यते। तर्हि किमनन्तरमस्यारम्भः? धर्मविचारानन्तरम्। न वयं धर्मब्रह्मविचाररूपयोः शास्त्रयोरत्यन्तभेदवादिनः, किंत्वेकत्ववादिनः। धर्मब्रह्मणोराराधनाराध्यभूतयोः प्रतिपादकं 'अथातो धर्मजिज्ञासा'† इत्यारभ्य 'अनावृत्तिश्शब्दात्'‡ इत्येतावत्पर्यन्तमेकं शास्त्रम्। तत्र 'अथातश्शेषलक्षणम्'§ इत्यादिवदवान्तरपरिच्छेदार्थीयं 'अथातो ब्रह्मजिज्ञासा' इत्यारम्भः॥

अथवा—धर्मस्य ब्रह्मबोधहेतुत्वात् तद्विचारोपयुक्तानां श्रुतिलिङ्गादीनां वेदचोदनार्थवादस्मृत्यादिप्रमाणप्रतिपादनादीनां च ब्रह्मविचारोपयुक्तत्वाच्च धर्मविचारानन्तरं ब्रह्मविचारः; साधनं विना साध्यानिष्पत्तेः। ब्रह्मबोधं प्रति धर्मस्य साधनत्वे 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन'¶ इत्यादिश्रुतिरेव भगवती प्रमाणम्। न च कर्मणो ब्रह्मबोधसाधनत्वे तदेव विचार्यमनुष्ठेयं च, किमनेन वेदान्तवाक्यविचारप्रयासेनेति वाच्यम्; तस्य फलाभिसन्धिरहितस्य पापापनयनरूपचित्तशुद्धिसंपादनद्वारा बोधहेतुत्वात्। तथाऽभियुक्तस्मृतिः 'यस्यैते चत्वारिंशत्संस्काराः' इत्यादिना 'स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति'** इत्यन्तेन गर्भाधानादिसकलकर्मणां पापमलापकर्षसंस्कारहेतुतां प्रकाशयति॥

---

*पू. मी. १-१-१.　　†पू. मी. १-१-१.　　‡उ. मी. ४-४-२२.
§पू. मी. ३-१-१.　　¶बृ. उ. ४-४-२२.　　**गौ. ध. ८-२४,२५.

अथ व्रीहिप्रोक्षणवत् सर्वकर्मणां संस्कारकत्वे 'सर्वे एते पुण्यलोका भवन्ति'* इति श्रुत्युक्ताश्रमफलस्वातन्त्र्यं न स्यादिति चेत्—न, पुण्यलोकफलाभिसन्धिपूर्वककर्मणां स्वातन्त्र्येऽपि तदभिसन्धिरहितेन पुंसा अनुष्ठितकर्मणां चित्तशुद्ध्यादिसंस्काररजनकत्वोपपत्तेः। तथा च तस्य पुंसो यदेव ज्ञानफलं तदेव कर्मफलं च। यथा व्रीहिप्रोक्षणं दर्शपूर्णमासोत्पत्त्यपूर्वहेतुतया स्वर्गे समुच्चीयते तथा कर्माणि ज्ञानप्रयोजकतया मोक्षे समुच्चीयन्ते। अतो गुणकर्मत्वादङ्गत्वमेतेषाम्॥

ननु नित्यविधिप्राप्तस्य ज्योतिष्टोमादेः इतिकर्तव्यतान्वयविरोधात् न संस्कारतासिद्धिरिति चेत्—न, करणतया स्वतन्त्रविध्यन्तरविहितस्य सौत्रामणिबृहस्पतिसवादेरग्निचयनवाजपेयाद्यङ्गत्ववत् उभयविधिबलादुभयसिद्धेः। अतो यावदुत्पद्यते ज्ञानं तावदनुष्ठेयानि कर्माणि॥

ननु 'विविदिषन्ति'† इति श्रवणात् कर्मणां ज्ञानेच्छासमुदयपर्यन्तमनुष्ठानमिति चेत्—न सारमेतत्; इच्छाया अपुरुषार्थत्वात्। कर्मणां ब्रह्मबोधसाधनानां विचारस्यानन्तरं ब्रह्मबोधशास्त्रारम्भस्समुचितः॥

ननु कर्मब्रह्मविचारयोः क्रमनियमः कथमुपपद्यते? कर्त्रैक्यादिति चेत्—कर्त्रैक्यमिह आघारदर्शपूर्णमासवत् अङ्गाङ्गित्वेन वा, पञ्चप्रयाजवत् एकाङ्गिप्रयुक्तानेकाङ्गत्वेन वा, गोदोहनादिवत् अधिकारान्तरप्रयुक्त्युपजीवित्वेन वा, षडहयागवत् फलैक्येन वा भवति। तथात्वे विचारयोः श्रुत्यादि प्रमाणं नोपलभ्यते। अतः कर्मब्रह्मविचारयोः न क्रमनियमो युक्त इति। यदि श्रुत्यादिप्रमाणं न संभवति, तदा खलु तथात्वं स्यात्। 'विद्यां

*छा. उ. २-२३-२.

†बृ. उ. ४-४-२२.

चाविद्यां च यस्तद्वेदोभयं सह'* 'तेनैति ब्रह्मवित्पुण्यकृत्'† 'सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्'‡ इत्यादिका ज्ञानकर्मसमुच्चयवादिनी श्रुतिरुपलभ्यते ; अतः कर्मज्ञानयोर्मोक्षैकफलत्वात् तद्विचारयोरपि क्रमनियमो युक्तः ॥

यद्यप्यक्षरग्रहणमात्रपर्यवसायित्वमध्ययनविधेः, तथापि विचारयोः न प्रवृत्त्यसंभवः, साङ्गाध्ययनेनापाततः पदार्थमात्रप्रतीतेः, तदनु ब्रह्मणः स्थूलोपासनज्योतिष्टोमादिविधायकानां वाक्यानां सूक्ष्मोपासनभूतदहरादिविद्याविधायकानां च परस्परविरोधाभासं पश्यन् तद्विचारे पुरुषार्थाकांक्षी पुरुषः स्वयमेव प्रवर्तते । ततो नानिबन्धनो विचारः ॥

ननु 'श्रोतव्यः' इति वाक्येन वेदान्तश्रवणं साक्षाद्विधीयते इति चेत्—न, विधित्वप्रयोजकरूपसंपत्त्यभावात् । तथाहि—वेदान्तश्रवणं नापूर्वविधिगोचरः, प्राप्तत्वात्; प्राप्तिश्च वेदान्तश्रवणं स्वविषयोपात्तावगतिसाधनम्, शास्त्रश्रवणत्वात्, वैद्यशास्त्रश्रवणवदित्यादिभिः । न चास्य नियमविधिगोचरत्वम्, अवघातादिवत् कस्य चित् दृष्टफलस्योपायान्तरस्याप्राप्तेः । न च परिसंख्याविधिविषयत्वम् । एवं हि वेदान्ताश्श्रोतव्या एव नाध्येतव्या इति पर्यवस्येत् । तथा सति अनधीतवेदान्तानां विचारायोगात्पुरुषार्थासंभवः । यदि वेदान्तश्रवणस्य परिसङ्ख्यापरत्वं कर्मकाण्डश्रवणनिवर्तकमिति विचारः, तदा विचाराभावात् कर्मानुष्ठानासंभवः । तदभावे चित्तशुद्ध्यभावात् ज्ञानानुत्पत्तिस्स्यात् । तस्मात्पूर्वोक्तमेव समीचीनम् ॥

ननु सकलचिदचित्प्रपञ्चाकारपरमशक्तिविशिष्टाद्वितीयवैभवस्य सकलनिगमसाररहस्यनिधानस्य भवशिवशर्वपशुपतिपरमे-

---

*ई. उ. ११.  †बृ. उ. ४-४-९.  ‡मु. उ. ३-१-५.

श्वरमहादेवरुद्रशम्भुप्रभृतिपर्यायवाचकशब्दसारप्रकाशितपरममहिमविलासस्य स्वशेषभूतनिखिलचेतनसमुपासनानुगुणसमुदितनिजप्रसादसमर्पितपुरुषार्थसार्थस्य परब्रह्मणः प्रतिपादकमुपनिषच्छास्त्रं विचारणीयम्, तन्नियोगरूपचोदनालक्षणस्य तदाराधनविशेषसार्थरूपस्य तत्तदर्थवादप्रकटितप्राशस्त्यविलासस्य श्रुत्यादिसम्पादितसकलाङ्गयुङ्क्तस्य स्वप्रमाणानुगुणस्मृतीतिहासपुराणाभियुक्तसूक्तिसंन्दर्भकृतोपबृंहणस्य विधिनिषेधविकल्पसमुच्चयोत्सर्गापवादबाधाभ्युच्चयादिमतः निखिलपुरुषार्थरत्नाकरस्य परमबोधसाधनस्य भगवतो धर्मस्य विचारानन्तरमित्यथशब्दार्थो निर्णीतः ॥

अतश्शब्दोयं वृत्तस्य हेतुभावे वर्तते । यतोधीतवेदेन धर्मो विचारितः अतस्तदनुष्ठानसंपन्नचित्तशुद्धिना तत्कालसंपन्नविवेकादिसमुल्लसितपरमभक्तिसंभावितेन अनेन ब्रह्मापि निरतिशयनिश्रेयसकरं विचारणीयमिति ॥

ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासेति कर्मणिषष्ठी ॥

परीक्ष्य लोकान् कर्मचितान्ब्राह्मणो<br>
निर्वेदमायान्नास्त्यकृतः कृतेन ।<br>
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्<br>
समित्पाणिश्श्रोत्रियं ब्रह्मनिष्ठम् ॥*

इत्यादिवाक्यं विषयः ॥

ब्रह्म विचारणार्हं भवति न वेति सन्देहः ॥

पूर्वपक्षस्तु—ब्रह्म न विचारयोग्यं भवति, तत्र सन्देहाभावात् । कथं सन्देहाभावः? 'अयमात्मा ब्रह्म'† इति श्रुतिरहमिति प्रत्ययेन प्रत्यक्षसिद्धमेवात्मानं ब्रह्मेत्युपदिशति । ततः कु-

*मु. उ. १-२-१२. †मा. उ. २.

तोत्र सन्देहकलङ्कप्रसङ्गः । किञ्च—विचारस्य फलं हि तद्विषयज्ञानं, ज्ञानं च ज्ञेयपरिच्छेदः । वेदान्तविचारजन्यं ज्ञानं ब्रह्म परिच्छिनत्ति न वा? यदि परिच्छिनत्ति तदा तस्य परिच्छेदातीतत्वभङ्गप्रसङ्गः । यदि न परिच्छिनत्ति ब्रह्म तदा यथावन्न प्रकाशेत । अयमिति हि परिच्छिन्नो घटादिरवगम्यते । ततो ब्रह्मविषयं ज्ञानमपि न संभवति । तथाऽपि प्रयोजनं च न किंचित्पश्यामः । न मुक्तिः प्रयोजनम्, अनादिसिद्धस्य संसारस्य दुरपह्नवत्वात्, इति ॥

एवं प्राप्ते ब्रूमः—सर्वथा समारम्भणीयं शास्त्रम्. ब्रह्मणः सन्दिग्धतया विषयत्वसंभवात्, तन्निर्णयस्य सप्रयोजनत्वाच्च । यत् 'अयमात्मा ब्रह्म'* इत्यादिश्रुतिः अमुमेवाहंकारबद्धं संसारिणं ब्रह्मेत्यभिधत्ते तत एव सन्देहः । निरस्तसमस्तोपप्लवकलङ्कनिरतिशयज्ञानानन्दादिशक्तिमहिमातिशयवत्त्वं हि ब्रह्मत्वम् । अनाद्यज्ञानवासनावष्टम्भविजृम्भितविचित्रकर्मफलभोगानुगुणबहुशरीरप्रवेशनिर्गमव्यापारपरवशनिस्सीमतापसहिष्णुत्वं हि जीवत्वम् । कथमेतयोः परस्परविलक्षणयोरेकभावमाहुः श्रुतय इति संशयः किं न स्यात् । अपि च एवमपि सन्दिह्यते—'अन्नं ब्रह्म'† 'मनो ब्रह्म'† 'विज्ञानं ब्रह्म'† 'आदित्यो ब्रह्म'‡ 'नारायण परं ब्रह्म'§ इत्यादयोन्यमन्यमर्थं ब्रह्मेत्याहुः । तत्र किं वा ब्रह्मेति बहुधा सन्दिग्धं ब्रह्म विचारार्हं भवति । तत्र श्रवणमननादिनिश्चितस्य भक्तिज्ञानविशेषाभिमुखस्य परमकारुणिकस्य महादेशिकस्य सर्वानुग्राहकस्य शिवस्य परब्रह्मणः प्रसादातिशयेनास्याधिकारिणः प्रध्वस्तपाशपटला प्रत्यक्षीभूतनिखिलज्ञानानन्दस्वरूपा तत्समानगुणसारा कैवल्यलक्ष्मीः प्रयोजनं च भवति । ततस्सविषयं सप्रयोजनं वेदान्तश्रवणम् ॥

---

*मा. उ. २. †छा. उ. ७-९, ३, ७. ‡छा. उ. ३-१९-१. §म. ना. उ. ९-५.

यदुक्तं ज्ञेयपरिच्छेदरूपत्वात् ज्ञानस्य तदपरिच्छिन्नब्रह्मविषयं न भवतीति, तदविचारविलसितम्; ईदृगिदमिति ब्रह्मणः परिच्छेदासंभवेऽपि लक्षणमुखेनेतरव्यावृत्ततामात्रेण परिच्छेदसंभवात्। लक्षणेन परिच्छेदो हि सर्वत्र लक्ष्यविषयमितरव्यावृत्ततया ज्ञानम्। उद्दिष्टस्य ब्रह्मणो लक्षणे वेदान्तवाक्यैर्निरूपिते परीक्षिते च तल्लक्षणशून्येभ्यः सजातीयविजातीयेभ्यः तदितरसकलपदार्थेभ्यो व्यावृत्तरूपं यत् तद्ब्रह्मेति विज्ञायते। ततस्समीचीनोऽयं ब्रह्मविषयः शास्त्रारम्भः। यदसंदिग्धमप्रयोजनं च तन्नन्तु न प्रेक्षावतां विचारकक्ष्यामारोहति। अस्य तु वेदान्तशास्त्रविचारस्य प्रमाणयुक्त्याभासप्रतिभासवशात् सन्देहास्पदं ब्रह्म विषयो भवति। 'ब्रह्मविदाप्नोति परम्'* 'ज्ञात्वा शिवं शान्तिमत्यन्तमेति'† 'ईशं तं ज्ञात्वा अमृता भवन्ति'‡ 'तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्'§ 'आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम्। ध्याननिर्मथनादेव पाशं दहति पण्डितः।'¶ 'ज्ञात्वा देवं मुच्यते सर्वपाशैः'** इत्यादिश्रुत्यनुसारेण तदुपासनयाऽस्याधिकारिणः पाशविच्छेदलक्षणा मुक्तिः प्रयोजनं चास्तीति प्रथमाधिकरणेऽत्र प्रतिपादितम्॥

## २. अधिकरणम्.

इहोद्दिष्टस्य ब्रह्मणो यन्निश्चायकं तल्लक्षणं किमित्याकांक्षायां तल्लक्षणाभिधायकं द्वितीयाधिकरणसूत्रमवतारयति भगवान् सूत्रकारः—

*तै. उ. २-१. †श्वे. ४-१४. ‡श्वे. ३-७.
§श्वे. ३-२०. ¶कैवल्योपनिषदि. **श्वे. १-८.

## जन्माद्यस्य यतः ॥ २ ॥

ज्ञाते लक्ष्ये लक्षणवैयर्थ्यात्, अज्ञाते तदाकाङ्क्षानुत्पत्तेः, कथमत्र ब्रह्मणो लक्षणकथनप्रसङ्ग इति न शङ्कनीयम्, अध्ययनादापाततो ज्ञाते ब्रह्मणि तद्योगात् ॥

जन्मादि अस्य यतः इति सूत्रपदच्छेदः । जन्मादिकं जन्मस्थितिलयतिरोभावानुग्रहरूपं कृत्यं अस्य चेतनाचेतनसंमेलनसमरसीभूतस्य प्रपञ्चविलासस्य यतो यस्मात् तत् ब्रह्मेति शेषः ॥

'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व, तद्ब्रह्मेति'* 'प्रधानक्षेत्रज्ञपतिर्गुणेशस्संसारमोक्षस्थितिबन्धहेतुः'† 'सत्यं ज्ञानमनन्तं ब्रह्म'‡ 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः'§ इत्यादिवाक्यं विषयः ॥

अत्र जगतो जन्मादिकं ब्रह्मणि लक्षणतया संभवति न वेति सन्देहः ॥

न संभवति, संबन्धाभावात् । किं च—'आनन्दो ब्रह्मेति व्यजानात्'¶ इत्यत्रानन्दस्य जगज्जन्मादि लक्षणं पर्यवस्यति । अन्यत्र 'सदेव सोम्येदमग्र आसीत्'** इति सतो जगत्कारणत्वमवगम्यते । 'सत्यं ज्ञानमनन्तं ब्रह्म'‡ इति ज्ञानमेवापरिच्छिन्नं जगत्कारणं ब्रह्मेत्येकत्र विज्ञायते । अपरत्र च 'यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः'†† इति शिवशब्दवाच्यं वस्तु कारणत्वेन सकलपूर्वभावि ब्रह्मेति विज्ञायते । अत्र आनन्दादीनां ब्रह्मत्वे विकल्पो वा? समुच्चयो वा? विकल्पे

---

*तै. ३-१.　†श्वे. ६-१६.　‡तै. २-१.　§महाना. २३.
¶तै. ३-६.　**छा. ६-२.　††श्वे. ४-१८.

श्रुतहान्यादिदोषप्रसङ्गः, अव्यवस्था च । व्यवस्थितविकल्पेऽपि ब्रह्मानेकत्वप्रसङ्गः । समुच्चयपक्षेऽपि नैवं धर्मरूपत्वात् निमित्त-जगन्निर्माणोपायज्ञानविशिष्टब्रह्मत्वासंभवः । अपि च 'मायां तु प्रकृतिं विद्यात्'* इति श्रुतिः मायाया अचेतनाया जगत्कारणत्वमभिधत्ते । तदेव युक्तं, ब्रह्मणो ज्ञानरूपस्य जगत्कारणत्वे तस्य विकारापत्त्या 'निष्कलं निष्क्रियं शान्तम्'† इत्यादिश्रुतिविरोधप्रसङ्गात् । अतस्सर्वथाऽपि ब्रह्मणो जगत्कारणत्वादिलक्षणमभिधातुमशक्यमिति ॥

एवमादौ पूर्वपक्षविक्षेपे प्राप्ते ब्रूमः—यद्यपि जन्मादेः जगन्निष्ठत्वेन ब्रह्मण्यसंबन्धः; तथाऽपि नातद्रूपेण लक्षणत्वं युज्यते । यत्सर्वज्ञत्वादिविशिष्टं अष्टाभिधानाधिकरणं शिवतत्त्वं तदेव जगत्कारणं ब्रह्मेत्युच्यते । आनन्दादीनामेव धर्माणां पर्यवसानं संभवति ॥

सर्वज्ञत्वं नित्यतृप्तत्वं अनादिबोधत्वं स्वतन्त्रत्वं अलुप्तशक्तित्वं अनन्तशक्तित्वं चेत्येतानि सर्वज्ञत्वादीनि ॥

नित्यापरोक्षानपेक्षितबाह्यकरणनिष्कलङ्कानुभवविषयीभूतनिखिलवस्तुत्वमिह सर्वज्ञत्वम् । 'यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः'‡ इत्यादिभिरिदं ब्रह्मणः सिद्धम् । अनेन सकलचेतनबहुविधकर्मफलभोगानुकूलतत्तच्छरीरनिर्माणोपायसामर्थ्यविशिष्टं ब्रह्म निमित्तं भवति ॥

निरस्तसमस्तोपप्लवकलङ्कनिरतिशयानन्दपरिपूर्णत्वमिह नित्यतृप्तत्वम् । अत एव 'आनन्दो ब्रह्म'§ इति श्रूयते । यः खलु 'अन्योऽन्तर आत्माऽऽनन्दमयः'¶ इति प्रस्तुत्य 'सैषाऽऽनन्द-

*श्वे. ४-१०. †श्वे. ६-१९. ‡मु. १-१.
§तै. ३-६. ¶तै. २-५.

स्य मीमांसा भवति,* इत्यारभ्याभ्यासात् निरतिशयशिरस्क-त्वेन 'स एको ब्रह्मण आनन्दः'* इति निरूपितः परब्रह्मधर्म-त्वेन, स एव 'आनन्दो ब्रह्म'† इति प्राचुर्यात् ब्रह्मत्वेनोपचर्यते । तादृशानन्दभोगरसिकं ब्रह्म नित्यतृप्तमित्युच्यते । ब्रह्मणो मनसैव महानन्दानुभवः, न बाह्यकरणद्वारा । तथा हि श्रुतिः 'आकाशशरीरं ब्रह्म, सत्यात्म प्राणारामं मनआनन्दम्, शान्तिसमृद्धममृतम्'‡ इति । आ काशत इत्याकाशः प्रकाशश्चिदम्बरमुच्यते; न भूताकाशः, विशेषाभावात् । निखिलजगदण्डपिण्डबुद्बुदनिकुरुम्बजलधिस्थानीया परप्रकृतिरूपा परमशक्तिर्हि चिदम्बरमुच्यते । तत्स्वरूपं ब्रह्माकाशशरीरम् । परप्रकृतित्वं चिदाकाशस्य, 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति'§ 'आकाशो वै नाम नामरूपयोर्निर्वहिता'¶ इत्यादिश्रुतिसिद्धम् । 'सत्यात्म' सत्तारूपम् । 'प्राणारामं' प्राणः सकलाधारभूता चिदम्बरशक्तिरुच्यते । स्वरूपभूतायां तस्यामेवारामो यस्य तत्प्राणारामम् । 'मनआनन्दं' मनस्यानन्दो यस्य न बाह्यकरणे तन्मनआनन्दम् । अत्राप्यानन्द इति चिदम्बरं प्रकृतिरुच्यते । तथा श्रूयते—'यदेष आकाश आनन्दो न स्यात्'** इति । 'शान्तिसमृद्धं' शिवतापन्नम् । 'अमृतं' अनादिमुक्तम् । अत्र सच्चिदानन्दरूपं परमाकाशस्वरूपं ब्रह्म स्वरूपानन्दं मनसैवानुभवति बाह्यकरणनिरपेक्षमिति सिद्धं 'मनआनन्दम्' इत्यनेन । इदमेव ज्ञापकं ब्रह्मभावमापन्नानां मुक्तात्मनां निरतिशयस्वरूपानन्दानुभवसाधनं बाह्यकरणनिरपेक्षं अन्तःकरणमस्तीति । अतो बाह्यकरणनिरपेक्षेण शुद्धबोधशक्तिरूपेण मनसा स्वरूपानन्दमनन्तमनुभवत् ब्रह्म नित्यतृप्तम् । न तस्य कदाऽपि बाह्यसांसारिकसुखलवापेक्षा भवतीत्यर्थः ॥

* तै. २-८.  † तै. ३-६.  ‡ तै. १-६.

§ छा. १-९-१.  ¶ छा. ८-१४-१.  ** तै. २-७.

स्वतस्सिद्धनिरतिशयज्ञानवत्त्वं अनादिबोधत्वम् । यत स्व-रूपानन्दानुभवसाधनं अन्तःकरणं ज्ञानं तदनादिसिद्धमेव । अ-तोऽनादिबोधं ब्रह्म, संसारनिवर्तकस्य ज्ञानस्यानादिसिद्धत्वात् । नित्यनिवृत्तसंसारदोषं 'शान्तिसमृद्धममृतम्'* इति श्रूयते ॥

अन्यप्रेष्यताकार्पण्यरहितत्वेन स्ववशीकृतस्वेतरसकलवस्तु-त्वं स्वातन्त्र्यम् । 'ज्ञाज्ञौ द्वावजावीशनीशौ'† 'भोक्ता भोग्यं प्रेरितारं च मत्वा'‡ 'विद्याविद्ये ईशते यस्तु सोऽन्यः'§ इत्या-दिषु ब्रह्मणः जडाजडप्रपञ्चप्रेरकत्वेन स्वतन्त्रत्वं सिद्धम् । सर्व-विषयस्वातन्त्र्येण ब्रह्मणः सर्वकर्तृत्वसिद्धिः ॥

स्वाभाविकशक्तिमत्त्वं अलुप्तशक्तित्वम् । तथाहि श्रवणात्-'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'¶ इत्यादिचिदचित्प्रपञ्चरूपशक्तिविशिष्टत्वं स्वाभाविकमेव ब्रह्मणः, कदाचिदपि न निर्विशेषत्वम्, इत्यनेन सिद्धम् ॥

अपरिच्छिन्नशक्तिविशिष्टत्वमनन्तशक्तित्वम् । अनन्ताभिरस्य शक्तिभिः जगतो जनकं शासकं च ब्रह्म भवति । तथाहि श्रूयते—'एक एव रुद्रो न द्वितीयाय तस्थुः य इमाल्लोका-नीशत ईशिनीभिः'** 'यस्सर्वान् लोकानीशत ईशिनीभिर्जननी-भिः परमशक्तिभिः'** इत्यादि । अनन्तशक्तिमत्वात् ब्रह्मणः अपरिच्छिन्नप्रपञ्चसमवायिकारणत्वं सिध्यति ॥

अष्टाभिधानाधिकरणमिति—भवशर्वेशानपशुपतिरुद्रोग्रभीम-महादेवाभिधानाष्टकस्य अधिकरणं वाच्यं परं ब्रह्म । अस्य सकल-शब्दवाच्यत्वेऽपि परभावबोधकत्वेन मुख्यतया भवादिशब्दाभिधेय-त्वेन नान्यशब्दाभिधेयत्वाभावप्रसङ्गः ॥

---

* तै. १-६. † श्वे. १-९. ‡ श्वे. १-१२.
§ श्वे. ५-१. ¶ श्वे. ६-८. **अथर्वशिरः.

सर्वत्र सदा भवतीति भवशब्दवाच्यं ब्रह्म, भूधातोस्सत्तार्थत्वात् । सर्वत्रानुवर्तमानं सद्रूपं ब्रह्मेति विज्ञायते । तथाहि श्रुतिः 'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्'* 'सत्यं ज्ञानमनन्तं ब्रह्म'† 'सत्यात्म प्राणारामं मनआनन्दम्'‡ 'सन्महः'§ इत्यादि। सन् घटः सन् पटः इति सर्ववस्तुष्वनुवृत्त्या सद्रूपस्य ब्रह्मणः सर्वोपादानत्वं सिध्यति । मृदुपरक्तं घटादिकं हि मृदुपादानमिष्यते । अतस्सद्रूपं ब्रह्म भवशब्दवाच्यं भवति ॥

शर्वशब्देन शॄ हिंसायामिति धात्वर्थवशात् सकलसंहर्तृ ब्रह्म प्रतिपाद्यते । 'तस्मादुपसंहर्त्रे महाग्रासाय नमः'¶ 'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः'** इत्यादिभिः सर्वसंहर्तृ ब्रह्म श्रूयते ॥

निरुपाधिकपरमैश्वर्यविशिष्टत्वात् ईशानशब्दवाच्यं ब्रह्म, 'य इमान् लोकानीशत ईशिनीभिः'|| इति श्रवणात् ॥

ईश्वरस्य ईशितव्यापेक्षितया पशुपतिशब्दवाच्यं ब्रह्म । तथाहि श्रूयते 'येषामीशे पशुपतिः पशूनां चतुष्पदामुत च द्विपदाम्'†† इत्यादि । पाशसंबन्धेन पशुत्वव्यवहारात् पशुग्रहणात् पशुपाशद्वयं च गृहीतं भवति । अनेन चिदचिन्नियामकं ब्रह्मेति विज्ञायते ॥

संसाररुग्द्रावकत्वात् रुद्रशब्दवाच्यं ब्रह्म, 'तरति शोकमात्मवित्'‡‡ इति श्रवणात् ॥

---

* छा. ६-२.　† तै. २-१.　‡ तै. १-६.　§ महाना. २४.
¶ अथर्वशिरः.　** कठ. २-२५.　†† तै. सं. ३-१-४.　‡‡ छा. ७-१.

परतेजोभिरनभिभवनीयत्वात् उग्रशब्दवाच्यत्वं ब्रह्मणः, 'न तत्र सूर्यो भाति न चन्द्रतारकम्'* इति श्रवणात् ॥

नियामकतया निखिलचेतनभयहेतुतया भीमशब्दाभिधेयं ब्रह्म, 'भीषाऽस्माद्वातः पवते'† इत्यादिश्रुतेः ॥

महत्त्वेन दीव्यमानतया महादेव इत्युच्यते शिवः । तथा अथर्वशिरसि 'अथ कस्मादुच्यते महादेवः? सर्वान् भावान् परित्यज्य आत्मज्ञानयोगैश्वर्ये महति महीयते तस्मादुच्यते महादेवः'‡ इति ॥

निरस्तसमस्तसंसारकलङ्कतया निखिलमङ्गलाधारतया शिवतत्त्वं यदवगम्यते तदुक्तस्वभावतया सकलजगज्जन्मादिकारणं भवति । तत्र तादृशमहिमनि जगदुभयकारणत्वसंभवात् तदेतादृशमहत्त्वात् ब्रह्मेत्युच्यते । तदेव शिवशब्दवाच्यं आनन्दादिधर्माश्रयतया सिद्धम् । अत आनन्दादीनां विकल्पादिचिन्ता निरर्थिका । 'मायां तु प्रकृतिं विद्यात्'§ इति मायायाः प्रकृतित्वमीश्वरात्मिकाया एव, 'मायिनं तु महेश्वरम्'§ इति वाक्यशेषात् । सूक्ष्मचिदचिद्विशिष्टं ब्रह्म कारणम्, स्थूलचिदचिद्विशिष्टं तत् कार्यं भवति । अतो जगज्जन्मादिलक्षणं ब्रह्मेति सिद्धान्तः ॥ २ ॥

---

## ३. अधिकरणम्.

लक्षणप्रमाणाधीना हि वस्तुसिद्धिः । जगत्कारणं ब्रह्म किम्प्रमाणकमित्यत आह—

---

*श्वे. ६-१४. †तै. २-८. ‡अथर्वशिरः. §श्वे. ४-१०.

# शास्त्रयोनित्वात् ॥ ३ ॥

यतश्शास्त्रं योनिः प्रमाणं तत एव जगज्जन्मादिलक्षणं ब्रह्म भवतीति शेषः ॥

अत्र जगत्कारणं ब्रह्म शास्त्रैकगम्यम्? उत प्रमाणान्तरेणापि गम्यम्? इति सन्देहः ॥

जगदिदं सावयवं कार्यमेव । तच्च वैचित्र्यगर्भितत्वेन स्वोचितकर्तृकमिति कर्ता कश्चित् कल्पनीयस्सर्वज्ञत्वादिमान् । नासौ शास्त्रैकगम्य इति नास्मिन् शास्त्रस्य प्रामाण्यम्, शास्त्रस्य प्रमाणान्तराप्राप्तविषयत्वात् । इति पूर्वपक्षः ॥

सिद्धान्तस्तु—जगत्कारणं ब्रह्म वेदान्तशास्त्रैकगम्यम्, 'नावेदविन्मनुते तं बृहन्तम्'* इत्यादिषु वेदान्तशास्त्रमन्तरेण ब्रह्मणो बोधासम्भवश्रवणात् ॥

यदुक्तं सावयवत्वात्कार्यत्वसिद्धौ प्रपञ्चस्य कर्ता समुचितः कल्प्य एक इति, तदसत्, विचित्ररचनस्य गोपुरप्रासादादेः बहुकर्तृकत्वदर्शनात् । तथा च नानुमानेनैककर्तृकत्वसिद्धिः । व्याप्तिबलेन तस्य कर्मपारवश्यादिप्रसङ्गश्च । हेतोः पक्षधर्मताबलात् अनुमानेन जगतो विलक्षणैककर्तृकत्वसिद्धावपि निमित्तोपादानशक्तियुक्तैककर्तृकत्वसिद्धिर्नास्ति । अतो वेदान्तशास्त्रैकगम्यं तत्प्रमाणं ब्रह्मेति सिद्धम् ॥

---

अनेन सूत्रेण पूर्वाधिकरणप्रतिपादितजगत्कारणत्वोपयोगि सर्वज्ञत्वं ब्रह्मणः शास्त्राणां वेदानां योनित्वात् कारणत्वात्सि-

*तै. ब्रा. ३-१२-९.

द्भवतीत्यपि प्रतिपाद्यते इति केचिदाहुः । सूत्रस्य सूचनात्मकस्य अर्थद्वयाभिधाने श्लेषकाव्यवत् वाक्यभेदादिदोषाभावात् पुनरधिकरणान्तरप्रस्तावः—

अत्र 'अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदस्सामवेदः'* इत्यादिः श्रूयते विषयः ॥

ब्रह्मणो वेदकर्तृत्वं युक्तं न वेति सन्देहः ॥

न युक्तमिति पूर्वः पक्षः, 'वाचा विरूप नित्यया'† इत्यादेर्वाचो नित्यत्वप्रतिपादिकायाः श्रुतेर्विरोधात्, वेदानां ब्रह्मकार्यत्वे पौरुषेयत्वात्, अप्रामाण्यप्रसङ्गाच्च । तस्मात् ब्रह्मणो वेदकर्तृता कथम्?

इति प्राप्ते ब्रूमः—युक्तमेव ब्रह्मणो वेदकर्तृत्वं 'अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदस्सामवेदः'* इति श्रुतेः निश्वसितवद्वेदराशेः अप्रयत्नेन ब्रह्मणः प्रादुर्भावावगमात्,

अष्टादशानामेतासां विद्यानां भिन्नवर्त्मनाम् ।
आदिकर्ता कविस्साक्षाच्छूलपाणिरिति श्रुतिः ॥

इति परमेश्वरस्य सकलविद्याकर्तृत्वप्रतिपादनाच्च । सृष्टेः प्राक् स्वात्मनि विलीनानां वेदानां पूर्वपूर्ववर्णानुपूर्व्यनुरूपरचनया पुनः कर्ता भवति सर्वज्ञः परमेश्वरः । अत एव वेदानामपौरुषेयत्वमीश्वरकार्यत्वं च । येषां रागद्वेषादयस्तेषां वचनमप्रमाणमपि भवति । निरस्तसमस्तदोषकलङ्कस्य निरुपप्लवनिरतिशयज्ञानप्रत्यक्षानुभूयमानत्रैकालिकवस्तुविलासस्य स्वतःप्रमाणस्य परमेश्वरस्य परमाप्तस्यावाप्तसमस्तकामस्य शिवस्य ब्रह्मणो वचनं तु प्रमाणमेव भवति । 'ईशानस्सर्वविद्यानाम्'‡ 'स नो देवश्शुभया स्मृ-

*बृह. ४-४. †तै. सं. २-६-११. ‡महाना. २१.

त्या संयुनक्तु'* इति हि परमेश्वरस्य सर्वविद्याप्रवर्तकत्वं शुभस्मृतिहेतुत्वं च श्रूयते। अतस्सर्ववस्त्ववभासकानां वेदानां परमेश्वरकर्तृकतया परमेश्वरस्य सर्वज्ञता निश्चीयते, अज्ञातस्य वक्तुमशक्यत्वात्॥

यद्यपि सर्वगतस्य परमेश्वरस्य सर्ववस्तुसंयोगेन सर्वज्ञत्वं सिद्ध्यति, तथाऽपि सकलवस्त्ववभासकानां वेदानां प्रणेतृता विशेषं दर्शयति। यथा दीपः स्वप्रभासंयुक्तेष्वपि रूपादिषु रूपमेव प्रकाशयति, न रसादि, तथा न परमेश्वरः, किं तु स्वशक्तिसंयुक्तं सकलमपि प्रकाशयतीति॥

ननु परमेश्वरस्य सर्वज्ञत्वं नाम वेदोक्तसकलपदार्थाभिज्ञत्वम्। तर्हि महर्षीणामपि वेदार्थवेदिनां सर्वज्ञत्वं सिद्धम्। किमत्र वैषम्यम्, इति चेत्—न, तत्कर्तुरीश्वरस्याधिकं ज्ञानमस्ति। व्याकरणादेरधिकार्थविदां हि पाणिनिप्रभृतीनां तत्प्रणेतृत्वं दृश्यते। वेदश्च सर्वार्थावभासकोऽपि न सर्वं मुख्यतः प्रकाशयति; किं तु किमपि लक्षणया, किमपि सामान्येन, किमपि विशेषेण। परमेश्वरस्सर्वसाक्षी सर्वं प्रत्यक्षयतीति वेदेश्वरयोरप्येतावद्वैषम्यमिष्यते॥

ननु परमेश्वरस्यैव वेदकर्तृत्वमिति न नियमः 'षड्ढोता वै भूत्वा प्रजापतिरिदं सर्वमसृजत ऋचो यजूंषि सामानि'† इत्यादिश्रवणात् हिरण्यगर्भादेरपि तत्कर्तृत्वावगमादिति चेत्—न, हिरण्यगर्भोत्पत्तेः प्रागपि वेदानां सद्भावात्। श्रूयते हि—'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै'‡ इति। यस्सर्ववेदानामादिमस्य हिरण्यगर्भस्यापि कर्ता तस्मै

---

*महाना. १२.  † तै. ब्रा. २-३-२.  ‡ श्वे. ६-१८.

सर्वान् वेदानुपदिशति स एव रुद्रोऽधिको वेदकर्ता परमदे-शिकः । तथा हि श्रुत्या अभिव्यज्यते —

यो देवानां प्रथमं पुरस्ता-
द्विश्वाधिको रुद्रो महर्षिः ।
हिरण्यगर्भं पश्यत जायमानं
स नो देवः शुभया स्मृत्या संयुनक्तु ॥

इति । महर्षिः वेदकर्ता यस्सर्वज्ञत्वादिना विश्वस्मात् चिदचिदा-त्मप्रपञ्चात् अधिको रुद्रः परब्रह्मभूतः सर्वेषां देवानामिन्द्रा-दीनां प्रथमं आदिमं हिरण्यगर्भं ब्रह्माणं स्वसंकल्पेन [illegible]-दात्मनो जायमानं सृष्टिकाले सर्वज्ञानोपायसकलवेदोपदेशाय कृपया अनुग्रहदृष्ट्या अपश्यत्, स परमदेशिकः नः अस्मानपि सकल-संसारपाशमहानर्थनिवृत्तिहेतुभूतया परमामृतलक्षणमोक्षसमा[illegible]-मानन्दप्राप्तिकारिण्या अत एव परममङ्गलरूपया वेदान्तरसामा-मरस्यासिद्धया स्मृत्या बोधकलया स्वोपपयया संयोजयत्विति तात्पर्यम् । ततस्सकलवेदकर्तृत्वमीश्वरस्य सिद्धम् । वाचां नि-त्यत्वश्रुतिः ईश्वरेण पूर्वसत्तानुवृत्त्या विहितत्वाद्वेदानामाविरुद्धा । ततो वेदानामीश्वरप्रणीतत्वं नित्यत्वं चाविरुद्धमेव ॥

---

## ४. अधिकरणम्.

प्रथमाधिकरणे जिज्ञास्यतया प्रतिपादितस्य परब्रह्मणः शिवस्य परिज्ञाने लक्षणापेक्षायां द्वितीयाधिकरणेन लक्षणं जग-ज्जन्मादिरूपमभिहितम् । तस्मिन् किं प्रमाणमित्याकाङ्क्षायां सू-

---

*महाना १२.

तीयाधिकरणेन वेदान्तशास्त्रस्य तद्विषये प्रामाण्यं तन्मूलत्वं च निरूपितम् । येन तद्व्यभिचारेण सिद्ध्यति तद्धि तस्य प्रमाणमुच्यते । वेदान्तवाक्यानां कथं वा ब्रह्मबोधकत्वमित्याकाङ्क्षायां चतुर्थाधिकरणमवतार्यते—

## तत्तु समन्वयात् ॥ ४ ॥

तच्छब्देन प्रकृतं ब्रह्म परामृश्यते । तुशब्देन सर्वाणि वेदान्तवाक्यानि समाह्रियन्ते । समन्वयशब्देन तात्पर्येण संबन्ध उच्यते । तत् ब्रह्म वेदान्तवाक्यानि तात्पर्यलिङ्गसंबन्धात् साधयन्तीति सूत्रार्थः ॥

अस्य सर्वाणि वेदान्तवाक्यानि विषयः ॥

वेदान्तवाक्यानां ब्रह्मबोधकत्वं युक्तं न वेति संशयः ॥

सर्वत्र संबन्धग्रहणसापेक्षं शब्दस्यार्थावबोधकत्वम् । शब्दार्थयोस्संबन्धज्ञानमन्तरेण हि पुरुषस्य शब्दार्थप्रत्ययो न भवति । संबन्धज्ञानं तु वृद्धव्यवहारापेक्षम् । व्यवहारश्च कार्यैकगोचरः । तथा हि 'गामानय' 'गां बधान' इति वृद्धवाक्यश्रवणसमनन्तरं प्रवर्तमानं प्रयोज्यवृद्धमवगम्य पार्श्वस्थो व्युत्पित्सुरेवमवधारयति—सर्वथाऽयं कार्यावगतिसमनन्तरमेव प्रवर्तते ; सा च कार्यावगतिः एतस्मादेव वाक्यात्समुत्पन्ना ; अन्यथा कथमस्यैतद्वाक्यश्रवणसमनन्तरं प्रवृत्तिरिति । पुनर्गवानयनबन्धनदर्शनात् कार्यविशेषं निश्चिनोति । तदेवं कार्यार्थत्वात् व्युत्पत्तेः न सिद्धे ब्रह्मणि शब्दस्य प्रामाण्यम् । किञ्च—कार्यविशेषस्याजगतः कर्तृविशेषस्य ब्रह्मणोऽनुमानादपि सिद्धेः कथमस्मिन् अप्रमाणविषयाणां वेदान्तवाक्यानां प्रामाण्यम् । अथ वा—विधिपराण्येव वेदान्त-

वाक्यानि, न ब्रह्मपराणि, उभयपरत्वे वाक्यभेदस्स्यात् । अतो वेदान्तवाक्यानां न ब्रह्मसाधकत्वं युक्तमिति पूर्वः पक्षः ॥

युक्तमिति सिद्धान्तः, वेदान्तवाक्यानां तात्पर्यलिङ्गसमन्वयेन ब्रह्मबोधनसमर्थत्वात् ॥

यदुक्तं कार्यार्थे एव व्युत्पत्तेः न सिद्धे ब्रह्मणि शब्दस्य प्रामाण्यमिति, तदसत्, 'पुत्रस्ते जातः' इत्यादिषु सिद्धार्थेष्वपि वाक्येषु संबन्धग्रहदर्शनात् । वृद्धव्यवहारेऽपि व्युत्पित्सुः स्वप्रवृत्तिहेतुभूतायाः कार्यावगतेः पदार्थज्ञानपूर्वकत्वावगमात् प्रयोज्यवृद्धस्य प्रयोजकवाक्यं पदार्थज्ञानमुत्पादयतीति निश्चिनोति । ततस्सिद्धार्थेष्वपि शब्दस्याभिधाननिश्चयः । अथ वा—किमिह वृद्धव्यवहारेण, व्युत्पत्तेः प्रकारान्तरेणापि सिद्धत्वात् । तथा हि—बाला मात्रादिभिः शशिपशुप्रभृतीनर्थानङ्गुल्यादिना निर्दिश्य तत्तच्छब्दांस्तेषुतेष्वर्थेषु प्रयुञ्जानैः बहुशः शिक्षितास्तेषुतेष्वर्थेषु व्युत्पाद्यन्ते । काव्यनाटकानभिज्ञाः पुरुषाः तदभिज्ञपुरुषसमीपमेत्य पदविच्छेदं कृत्वा अस्य शब्दस्यायमर्थ इति सर्वशब्दानामर्थमवगच्छन्ति । अतः सिद्धार्थेऽपि व्युत्पत्तिसम्भवात् तत्र शब्दस्य प्रामाण्यमस्ति । ततो वेदान्तवाक्यानां ब्रह्मणि प्रामाण्यम् ॥

यदुक्तं जगतः कार्यविशेषत्वात् कर्तृविशेषस्य ब्रह्मणोऽनुमानादपि सिद्धिरिति—तन्न संभवति, विचित्ररचनस्य रथगोपुरप्रासादादेः अनेककर्तृकत्वदर्शनात् अनुमानेनास्य जगत एककर्तृकत्वसाधनायोगस्य व्याप्तिबलात्कर्मवश्यत्वादीनां कर्तरि प्राप्तेश्च पूर्वमुक्तत्वात् । अतो नानुमानगम्यं ब्रह्म भवति । किञ्च—श्रुत्यानुगुण्यादनुमानमपि ब्रह्मणि प्रमाणं भवतु नाम ॥

यत्र वाक्यानां तात्पर्यं तत्र हि तेषां प्रामाण्यं, न प्रत्यक्षादीनामिव सर्वत्र। वेदान्तवाक्यानां ब्रह्मणि तात्पर्यनिर्णायकानि कानि लिङ्गानीति चेत्—उपक्रमादीनि । तथा पठन्ति—

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥

इति । तदिहोपक्रमादिभिर्लिङ्गैः वेदान्तवाक्यानां ब्रह्मणि तात्पर्यं निश्चीयते । य उपक्रमादिभिस्तात्पर्यनिर्णयः तदेव वेदान्तवाक्यानां श्रवणमित्युच्यते । तथा ह्युच्यते—

अज्ञानप्रभवं दुःखं ज्ञानं तस्य निवर्तकम् ।
सर्ववेदान्तवाक्यानां श्रवणं तत्प्रवर्तकम् ॥
श्रवणं नाम वाक्यानां वैदिकानां परात्परे ।
उपक्रमादिभिर्लिङ्गैश्शिवे तात्पर्यनिर्णयः ॥

इति । उपक्रमोपसंहारावेकं लिङ्गं वेदान्तवाक्यानां ब्रह्मणि शिवे तात्पर्यनिर्णये । तत्र तात्पर्यं नाम तत्स्वरूपोपासनाविषयत्वम् । उपक्रमोपसंहारौ—'सदेव सोम्येदमग्र आसीत्'* इत्युपक्रमः, 'तत्त्वमसि'* इत्युपसंहारः । 'धातुः प्रसादान्महिमानमीशम्'† इत्युपक्रमः 'यः परस्स महेश्वरः'† इत्युपसंहारः । एवमन्यत्रापि द्रष्टव्यम् । 'तत्त्वमसि'* 'सर्वो वै रुद्रः'‡ 'अम्बिकापतय उमापतये'‡ 'यो वै रुद्रस्स भगवान् यश्च ब्रह्मा'§ इत्यभ्यासः । अपूर्वता वेदेतरप्रमाणाप्राप्तत्वम् । फलं ब्रह्मज्ञानम् । अर्थवादः जगत्सृष्टिस्थितिप्रध्वंसादयः । उपपत्तिर्विरोधाभावः, सर्वज्ञतादिसंपत्तिर्वा । एतैर्लिङ्गैः ब्रह्मणि ता-

*छा. ६-२...८.　†महाना. १२.　‡महाना. २२...२४.
§अथर्वशिरः.

त्पर्यमवगन्तव्यं वेदान्तवाक्यानाम् । न केवलं ब्रह्मपरा वेदान्ताः, किं तु 'आत्मा वाऽरे द्रष्टव्यः'* इत्यादिषु तज्ज्ञानविधिपरा अपि विज्ञायन्ते ॥

उभयपरत्वे वाक्यभेदप्रसङ्ग इति यदुक्तं तन्न—रूपप्रत्यायकेन चक्षुषा यथा द्रव्यस्यापि सिद्धिः तथा विधिपरैरपि वेदान्तैः ब्रह्मसिद्धिरिति नोभयपरत्वे विरोधः । शाब्दं हि ब्रह्मज्ञानम् । तत् ब्रह्मवाचिशब्दादेव प्राप्तं भवति । तद्विधिना किं प्रयोजनमिति चेत्—प्राप्तावपि मन्त्रादिष्विव विधेरविरोधः । यथा द्रव्यदेवतादिप्रकाशकेषु मन्त्रेष्वधीयमानेषु द्रव्यादिज्ञाने जातेऽपि पुनरनुष्ठानकाले मन्त्रैरनुस्मर्तव्यमिति प्रयोगविधिः ज्ञानान्तरमनुष्ठापयति, तथाऽत्रापि । न चोत्पत्तिविनियोगाधिकारविधीनामभावात्प्रयोगविध्यसंभव इति शङ्कनीयम् । उत्पत्तिविधेरध्याहारेण सिद्धौ प्रकरणवशात् शमादिकं विनियोजयन् 'आत्मानं पश्येत्' इति विनियोगविधिरुपपद्यते । ततश्च रात्रिसत्रन्यायेन 'ज्ञात्वा देवं मुच्यते सर्वपाशैः'† इत्याद्यर्थवादावगतमोक्षकामोऽधिकारी कल्पनीयो भवति । अतो मोक्षकामः शमादियुक्तो ब्रह्मज्ञानं संपादयेदिति प्रयोगविधिलाभः ॥

ननु ब्रह्मज्ञानस्य विधेयत्वमनुपपन्नम्, 'आत्मा वाऽरे द्रष्टव्यः'‡ इत्यादौ । नित्ये ब्रह्मणि निर्विकारे विशुद्धे चात्मनि हि न कर्मकारकभावो युज्यते येन विधिसंभवः, उत्पत्तिप्राप्तिविकारसंस्काराणामत्रासंभवात् । न च स्वतन्त्रफलाय सक्तुन्यायेन कर्मकारकतां परित्यज्य करणत्वपरिणामेन आत्मना पश्येदिति विधातुं शक्यम्, वैषम्यात् । तथा हि—क्रियाकृतातिशयस्य भस्मीभावलक्षणस्य सक्तुषु संभवात्, तेषु शब्दतः करण-

*बृह. ४-५. †श्वे. ३-७. ‡बृह. ४-५.

त्वेऽपि अर्थतः कर्मत्वमस्ति । न तस्यात्मनि संभवः । अतो वेदान्तानां न ब्रह्मज्ञानविधिपरत्वमिति चेत्—

न, आत्मनि कर्मत्वप्रयुक्तोत्पत्त्याद्यभावेऽपि कर्तृस्थमोक्षफलाय विध्युपपत्तेः । प्राप्ते कथं विधिरिति चेत्—प्राप्तिः पाक्षिकी? नित्या वा? उभयथाऽपि नियमादिविधिस्संभवति ॥

ननु तथा सति वेदान्तानां विधिपरत्वेन ब्रह्मपरत्वमनुपपन्नम् । यदुक्तं रूपप्रत्यायकेन चक्षुषा द्रव्यसिद्धिवत् विधिपरैरपि वेदान्तैः ब्रह्मसिद्धिरिति—तदयुक्तम्, चक्षुर्हि संप्रयोगे सति निरपेक्षमेव प्रतिवस्तु प्रमाणं, न तथा शब्दः, किं तु यत्र तात्पर्यं तत्र प्रमाणम् । तस्माद्वेदान्तानां ब्रह्मप्रमापकत्वं ब्रह्मज्ञानविधायकत्वं च न संभवतीति चेत्—

न, 'समिधो यजति'* इत्यादीनां वाक्यानां पञ्चप्रयाजविधायकत्वं तदनुष्ठानक्रमविधायकत्वं चेति उभयपरत्वदर्शनात् वेदान्तवाक्यानामपि ब्रह्मप्रमापकत्वं ब्रह्मज्ञानं मोक्षोपकारकं प्रति विधायकत्वं च युक्तमेव ॥

ननु ब्रह्मणि वाक्यादेव ज्ञाते तज्ज्ञानविधिरप्रयोजनः, तत्प्रयोजनस्य पूर्वज्ञानादेव संभवात् इति चेत्—

न, वाक्येन परोक्षत्वेन ज्ञातेऽपि ब्रह्मणि तत्साक्षात्काराय ज्ञानविधेरुपपत्तेः । कथं सेद् इति चेत्? यत् शब्दजन्यं ज्ञानं न तत्साक्षात्कारहेतुः, किं तु उपासनारूपज्ञानमेव । तथा च श्रूयते 'ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्'† 'ज्ञाननिर्मथनादेव पाशं दहति पण्डितः'‡ इत्यादिषु । 'ज्ञात्वा

*तै. सं. २-६-१.　　†कैव. २.　　‡कैव.

देवं मुच्यते सर्वपाशैः'* 'ईशं तं ज्ञात्वा अमृता भवन्ति'† इत्यादिषु च । तथाहि सति—

श्रोतव्यश्श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ।
ज्ञात्वा च सततं ध्येय एते दर्शनहेतवः ॥

इत्यत्र श्रवणमननसंपन्नज्ञानाविनाभूतं निदिध्यासनं ब्रह्मणः साक्षात्कारे निमित्तमिति स्मर्यते । अत उपासनरूपं ज्ञानं मोक्षफलं विधीयते । 'आत्मन्येवात्मानं पश्येत्'‡ 'शम्भुराकाशमध्ये ध्येयः'§ इत्यादिषु । 'तज्जलानिति शान्त उपासीत'¶ 'इति प्राचीनयोग्योपास्व'** इत्यादिषु च । तथा 'ब्रह्मविदाप्नोति परम्'§ इत्यादिषु ब्रह्मस्वरूपोपासनानन्तरमोक्षमुपदिश्यते । अन्यथा सत्यत्वादिविशिष्टब्रह्मणा सह कथं सकलकामावाप्तिः फलं तादृशब्रह्मसाक्षात्करणं च सिद्ध्यति । 'सत्यं ज्ञानमनन्तं ब्रह्म'†† 'आनन्दं ब्रह्म'‡‡ 'आकाशशरीरं ब्रह्म । सत्यात्मप्राणारामं मनआनन्दम् । शान्तिसमृद्धममृतम्'¶ 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षम्'§§ इति सत्यज्ञानानन्दस्वरूपं स्वात्मारामम् उपशान्तसकलोपद्रवकलङ्कं सकलमङ्गलात्मकं परमशक्त्या अविनाभूतया शक्तिरूपत्वेन कृष्णपिङ्गलं विरूपाक्षं त्रिलोचनं ब्रह्म उपक्रमादितात्पर्यलिङ्गैर्निरूप्यते । 'यो वेद निहितं गुहायाम्'†† 'इति प्राचीनयोग्योपास्व'§ इति ज्ञानाविनाभूतं तदुपासनं विधीयते । 'सर्वान्कामान्'†† इत्यादिना सकलकामावाप्तिर्ब्रह्मणा सह उपासकानामवगम्यते । अतो निष्कामनिजधर्मोपेतो निषिद्धकाम्यकर्म-

*श्वे. ३-७. †श्वे. १-८. ‡बृ. उ. ४-४-२३.
§अथर्वशिखा. ¶छा. ३-१४. **तै. १-६.
††तै. २-१. ‡‡बृह. ३-९-२८. §§महाना. १२

हितो यथाश्रुतिस्मृतिचोदितकर्मानुष्ठानसंपन्नचित्तशुद्धिः शमाद्यनुगृहीतपरमशिवशक्तिभावित एव मुमुक्षुः श्रुतिसारेभ्यः शिवाभिधेयं परं ब्रह्म विदित्वा 'तदुपासीत' इति ज्ञानोपासनाविधिरुपपन्नः । अत्र शिवोपपदग्रहणं विरूपाक्षस्य ब्रह्मणः परमविशुद्धिमङ्गलभाजनत्वात् मुमुक्षूणामुपासनैकविषयत्वद्योतनार्थम्। तथाऽथर्वशिखायां 'शिव एको ध्येयः शिवङ्करस्सर्वमन्यत्परित्यज्य'* इति श्रूयते शिवशब्दवाच्यस्यैव वस्तुनः ध्येयत्वमिति । अन्यथा कथं संसारनिवृत्तिः? निरस्तसमस्तदोषकलङ्कनिरतिशयमङ्गलाधारत्वं हि शिवत्वम्, यज्ज्ञानान्मोक्षरूपं फलमुच्यते—

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥

इति । 'शिव एको ध्येयश्शिवंकरस्सर्वमन्यत्परित्यज्य'* इति शिवव्यतिरिक्तस्य मुमुक्षूणां ज्ञेयत्वं ध्येयत्वं च परिसंख्यायते । अतश्शिव एव परं ब्रह्म मोक्षकामैः ज्ञातव्यो ध्यातव्य इति । अतः तात्पर्यलिङ्गसमन्वयेन ब्रह्मपरा वेदान्ताः तदुपासनविधिपराश्चेत्यविरोधः ॥ ४ ॥

---

## ५. अधिकरणम्.

उक्तस्य ब्रह्मलक्षणस्य प्रधानेऽतिव्याप्तिमाशङ्क्याह—

### ईक्षतेर्नाशब्दम् ॥ ५ ॥

छान्दोग्ये श्रूयतेऽस्य विषयः 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्......तदैक्षत बहु स्यां प्रजायेयेति' इत्यादि ॥†

---

*अथर्वशिखा. †छा. ६-२.

इह पूर्वभावितया सकलप्रपञ्चस्यास्य कारणतया श्रूयमाणं सदिति वस्तु ब्रह्म वा? प्रधानं वा? इति सन्देहः॥

प्रधानस्यैव जगत्कारणत्वं युक्तं 'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्'* इति श्रुत्यन्तरे श्रवणात्। अत्र हि बहुप्रजाजनकत्वं लोहितादिवर्णानुमितरजस्सत्त्वतमोरूपायाः सांख्यप्रकृतेरवगम्यते। तदानुगुण्येनात्रापि सच्छब्दवाच्यं जगत्कारणं प्रधानमेव। रजस्सत्त्वयोगादस्य क्रियाज्ञानशक्तिसंबन्धोपि युज्यते, येन जगत्कारणत्वसिद्धिः। अचेतनस्य प्रधानस्य जगदाकारपरिणामो युक्तः, न चेतनस्य परमेश्वरस्य कूटस्थस्य, कारणविकृतिरूपत्वात्परिणामस्य। ततो न्यायतः श्रुतितश्च प्रधानमेव जगत्कारणं सत्पदवाच्यम्॥

इति प्राप्ते ब्रूमः—अशब्दमानुमानिकं प्रधानं न जगत्कारणं सत्पदवाच्यं वस्तु, अपि तु ब्रह्मैव चेतनं, 'ईक्षतिश्रवणात्, 'तदैक्षत बहु स्यां प्रजायेयेति'† इति। न ह्यचेतने प्रधाने चेतनधर्मः ईक्षतिस्संभवति॥

यदुक्तं 'बह्वीं प्रजां जनयन्तीं सरूपाम'* इति श्रवणात् सांख्यप्रकृतेरत्र जगत्कारणत्वमिति, तदसंगतम्,—'चमसवदविशेषात्'‡ इति सूत्रे हि परमेश्वरकारणिकाया एव प्रकृतेर्बहुप्रजाजनकत्वमित्युपपादयिष्यामः। रजस्सत्त्वरूपतया क्रियाज्ञानशक्तिसंबन्धः प्रधानस्येति यदुक्तं तदयुक्तम्, त्रिगुणात्मिकायाः प्रकृतेः तमःपार्थक्येन रजस्सत्त्वयोगाभावात्। तस्मिन् न्यग्भूते रजस्सत्त्वयोरुद्रेके ज्ञानक्रियासंबन्धः प्रधानस्येति न वाच्यम्, सत्त्वरजस्तमसां साम्यावस्था प्रकृतिरित्यङ्गीकारात्। कूट-

*महाना. १२. †छा. ६-२. ‡ब्र. सू. १-४-८.

स्थस्य परमेश्वरस्य जगदाकारेण परिणामो विकारहेतुरिति ब्रह्मणि, तदज्ञानविलसितम्—नामरूपविभागानर्हसूक्ष्मचिदचिच्छक्तिविशिष्टस्य परमेश्वरस्य कारणत्वं, नामरूपविभागार्हस्थूलचिदचिच्छक्तिविशिष्टस्य कार्यत्वमिति वदतामस्माकं तत्प्रसंगभयाभावात् ॥

ननु 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्'* इत्यादिना सद्रूपं वस्तु निर्विशेषमवधारणादवगम्यते । कारणावस्थमेतत्कथं सूक्ष्मप्रपञ्चविशिष्टमित्युच्यते? इति चेत्—'सदेव' इत्यवधारणेन न विशेषनिषेधः, किंतु असत्कारणत्वनिषेधः, 'असद्वा इदमग्र आसीत्, ततो वै सदजायत'† इति श्रवणादसत्कारणत्वस्य भ्रान्तिप्रसक्तत्वात् ॥

किंच—'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्'* इत्यत्र कथं निर्विशेषत्वं ब्रह्मणः? 'आसीत्' इति हि क्रियाविशेषः, 'अग्रे' इति कालविशेषः, 'एकमेव' इत्यवधारणं अधिष्ठात्रन्तरनिषेधपरम्, अद्वितीयमिति जगदुपादानत्वमुच्यते । अत एव सर्वज्ञमनन्तशक्तिविशेषं च,—कथं सर्वज्ञत्वसर्वशक्तित्वविशेषमन्तरेण जगदुभयकारणत्वं ब्रह्मणो भवति? । अथवा—प्रकृतिप्रत्ययात्मकस्य सत्पदस्य नैकवस्तुपरत्वं युक्तं, प्रकृत्या प्रत्ययेन च सत्पदस्य वस्तुद्वयप्रतिपादनपरत्वात् । तथा ह्यभियुक्तसूक्तिः—

शक्तिशिवश्च सच्छब्दप्रकृतिप्रत्ययोदितौ ।
तौ ब्रह्म सामरस्येन समस्तजगदात्मकौ ॥

इति । स्थूलसूक्ष्मचिदचित्प्रपञ्चरूपशक्तिविशिष्टः परमेश्वर एव कार्यकारणरूपस्सत्पदस्य विषय इति निर्णयः ॥ ५ ॥

---

*छा. ६-२.　　　　† तै. २-७.

पुनराशङ्क्य परिहरति—

## गौणश्चेन्नात्मशब्दात् ॥ ६ ॥

ईक्षतेः चेतनधर्मस्य अचेतने प्रधाने योगाभावात् चेतनमेव परं ब्रह्म सत्पदवाच्यं कारणमिति प्रतिपादितम् । तदसंगतमेव—'तत्तेज ऐक्षत, ता आप ऐक्षन्त '* इत्यादिष्वचेतनेष्वपि ईक्षतिर्यथा गौणश्श्रूयते तथा प्रधानेऽपि गौण इति चेत्—न, चेतनवाचिन आत्मशब्दात्, 'सदेव सोम्येदमग्र आसीत्'* इत्यारभ्य उपसंहारे 'स आत्मा तत्त्वमसि'* इति श्रवणात् । तेजःप्रभृतिष्वपि न गौणमीक्षतिश्रवणं, तत्तदात्मतया परमेश्वरस्य चेतनस्यानुवृत्तेः ॥

नन्वीक्षतिश्रवणं गौणमभ्युपेत्यापि अचेतनं प्रधानं सद्रूपं जगतः कारणमिति वक्तुमशक्यम्, तस्य चेतनत्ववाचिन आत्मशब्दादिति निरूपितम् । भवतु नात्मशब्दस्याचेतनं प्रधानमर्थ इति । भवति तु चेतनस्य जीवस्यात्मशब्दवाच्यत्वं मुख्यम् । ततो जीव एव चेतनो जगत्कारणं सद्रूपमित्यत आह—

## तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥

सत्पदवाच्यतत्त्वनिष्ठस्य मोक्ष उपदिश्यते 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये'* इति । तस्मान्न प्रधानं जीवश्चात्र सत्पदविषयः । प्रधानकारणवादिनामपि तन्निष्ठस्य मोक्षो नाभिमतः, त्याज्यत्वात् । न च जीवनिष्ठस्य, निषेधात् 'शिव एको ध्येयश्शिवंकरस्सर्वमन्यत्परित्यज्य'† इति ॥

पुनरपि स्पष्टमेव हेतुमाह प्रधाननिराकरणे—

---

*छा. ६-२......१४. †अथर्वशिखा.

## हेयत्वावचनाच्च ॥ ८ ॥

यदि प्रधानमेवात्र विवक्षितं, तदा तस्य हेयत्वमेवोच्येत । 'तत्त्वमसि'* इति मोक्षहेतुतया ध्येयत्वमुच्यते । ततो न प्रधानमिति युक्तम् ॥

किञ्च प्रधानपक्षे विरोध इत्याह—

## प्रतिज्ञाविरोधात् ॥ ९ ॥

इतश्च न प्रधानं सच्छब्दवाच्यं, एकविज्ञानेन, सर्वविज्ञानप्रतिज्ञाविरोधात् । सत्पदवाच्यतत्त्वज्ञानेन तत्कार्यतया सकलचेतनाचेतनवस्तुविज्ञानं भवतीति 'येनाश्रुतं श्रुतं भवति'* इत्यादिना प्रतिज्ञायते । प्रधानकारणत्वे विरुद्धमेतत्, चेतनस्य प्रधानकारणत्वायोगात् ॥

प्रधानकारणे ज्ञाते जाड्यविकारास्पदं तत्कार्यमिदं च सर्वं ज्ञायते यथा मृदि ज्ञातायां तत्कार्यं घटादिकम् । अतः कोऽत्र विरोध इत्याशङ्क्याह—

## स्वाप्ययात् ॥ १० ॥

इतश्च न प्रधानं सच्छब्दवाच्यं 'स्वप्नान्तं मे सोम्य विजानीहिति, यत्रैतत्पुरुषस्स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते'* इति जीवस्य चेतनस्य सता सम्पन्नस्य स्वाप्ययवचनात् । स्वाप्ययः प्रलयः । अचेतने प्रधाने चेतनस्य लयो न युक्तः । अतो न प्रधानं सदुच्यते ॥

---

*छा. ६-१...८.

सच्छब्देन परमेश्वर एव प्रतिपाद्यते न प्रधानमित्याह—

## गतिसामान्यात् ॥ ११ ॥

यथाऽस्यामुपनिषदि सत्पदस्य परमेश्वरवाचित्वेन गतिः, तथा श्रुत्यन्तरेऽपि समाना । 'पुरुषो वै रुद्रस्सन्महो नमो नमः'* इत्यादौ । अतस्सत्पदवाच्यः परमेश्वर एव ॥

व्यक्तमेवास्यामुपनिषदि सत्पदवाच्यादात्मनः सर्वोत्पत्तिः श्रूयते इत्याह—

## श्रुतत्वाच्च ॥ १२ ॥

अत्रापि 'आत्मतः प्राणः आत्मत आकाशः'† इत्यारभ्य 'आत्मत एवेदं सर्वम्'† इति श्रूयते । ततो जगत्कारणत्वेन सत्पदवाच्यं ब्रह्मैव न प्रधानमिति सिद्धम् ॥

---

## ६. अधिकरणम्.

इह ब्रह्मलक्षणस्य जगत्कारणत्वस्य शास्त्रैकसमधिगम्यस्य तान्त्रिके प्रधानेऽतिव्याप्तिमाशङ्क्य चेतनत्वादिहेतुना यथा तस्मिन्नतिव्याप्तिर्न भवति तथा निरूपितम् । अचेतने प्रधाने इव चेतनेऽपि जीवे तन्नातिव्याप्तमिति वक्तुमधिकरणान्तरमारभ्यते—

## आनन्दमयोऽभ्यासात् ॥ १३ ॥

'तस्माद्वा एतस्मादात्मन आकाशस्संभूतः'‡ इत्यारभ्य 'तस्माद्वा एतस्माद्विज्ञानमयात्, अन्योऽन्तर आत्माऽऽनन्दमयः'‡

*महाना. †छा. ७-२५. ‡तै. २-१,५.

इति कश्चिदाकाशादिसकलभूतकारणत्वेन अन्नमयादिकोशकञ्चुकान्तरनिगूढ आत्मा आनन्दमय इति आनन्दवल्ल्यामाम्नायते ॥

अत्रानन्दमय आत्मा जीवो वा? परमेश्वरो वा? इति सन्देहः ॥

जीव इति पूर्वः पक्षः, तद्धर्माणामत्रोपलम्भात् । तथाहि— 'पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्, अन्नात्पुरुषः'* इत्यादिना पञ्चावयवं शरीरादिकं निरूप्यते । अत्र 'अन्नमयः' इति शरीरमुच्यते । 'प्राणमयः' इति तदन्तर्वर्ती प्राणः । 'मनोमयः' इति तदन्तर्वर्ति मनः । 'विज्ञानमयः' इति तदन्तर्वर्तिनी बुद्धिः। 'आनन्दमयः' इति सर्वेषामन्नमयादीनामाश्रयो जीव एव । अन्नादीनां शिरःप्रभृतिकल्पना समुपासनार्था । अन्नादीनां ब्रह्मत्वेनोपासनात् तत्तदन्नादिसमृद्धिः फलमुक्तम् । कथमस्य संसारसागरदुःखमग्नस्य जीवस्यानन्दमयत्वाभिधानमिति चेत्— न, अत्रानन्दशब्देन परं ब्रह्मोच्यते 'आनन्दो ब्रह्म'† इति श्रवणात् । मयट्छब्दस्य विकारार्थत्वात् तत्कार्यभूतो जीव एव आनन्दमय इत्युच्यते । नित्यसंपन्नशिवत्वस्य ब्रह्मणः आनन्दमयत्वाङ्गीकारे 'अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुद्ध्यन्ताम्'‡ इति शुद्धिप्रार्थना व्यर्था स्यात् । अतोऽयमानन्दमय आत्मा जीव एव न परमेश्वरः ॥

इति प्राप्ते ब्रूमः—आनन्दमयोयमात्मा परमेश्वर इति । कुतः? अस्यानन्दस्य निरतिशयत्वेनाभ्यासात् । कथमभ्यस्यते? 'सैषाऽऽनन्दस्य मीमांसा भवति'§ इत्यारभ्य मानुषविशेषादिप्रजापतिपर्यन्तं तत्तदानन्दस्योपर्युपरि शतगुणमतिशयमभिधाय 'स एको ब्रह्मण आनन्दः'§ इति ब्रह्मानन्दो निरतिशयशिरस्क-

* तै. २-१.　† तै. ३-६.　‡ महाना. ५७.　§ तै. २-८.

त्वेनाभ्यस्यते । तदेतन्निरतिशयानन्दभाजनत्वमस्य संसारिणो न संभवति ॥

यदुक्तं आनन्दमयस्येश्वरत्वे नित्यशुद्धस्य तस्य कथं विशुद्धिप्रार्थनेति । तत्रेदमुत्तरम्—यथा प्रकृष्टप्रकाशस्य चन्द्रस्य तिरोधायकघनापगम एव प्रसादः तथा तस्य नित्यशुद्धस्य तिरोधानमलापनयनमेव शुद्धिः । तस्मादानन्दमयः परमेश्वर एव॥

नन्वानन्द एव ब्रह्मेत्युच्यते, तद्विकार आनन्दमयः, मयटो विकारार्थत्वात् । आनन्दमयस्येश्वरत्वाभ्युपगमे ब्रह्मणोऽन्य ईश्वर इति प्राप्नोति । तथा सति तस्य विकाररूपत्वादनित्यत्वं चेत्याशङ्कायामाह—

## विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १४ ॥

अन्नमयादीनां यथाऽन्नादिविकाररूपत्वं तथाऽऽनन्दमय इत्यानन्दविकारः, यथा मृद्विकारो हि मृन्मयो घटादिः । अतः परमेश्वरस्य विकारत्वासंभवात् अयं जीव एवेति चेत्—न, मयट्छब्दस्यात्र प्राचुर्यार्थत्वात् । अन्नमयप्राणमयमनोमयपर्यन्तमेव मयट् विकारार्थः । विज्ञानमयो विज्ञानप्रचुरो जीवः । आनन्दमयोऽप्यानन्दप्रचुरः परमेश्वरः ॥

सर्वथा विकारप्रकरणपठितत्वात् विकारार्थ एव समुचितो मयट्छब्द इत्याशङ्क्याह—

## तद्धेतुव्यपदेशाच्च ॥ १५ ॥

'एष ह्येवानन्दयाति'* इति जीवान्प्रत्यानन्दहेतुतया आन-

* तै. २-७.

न्दमयश्श्रूयते । स्वयं प्रचुरानन्दो हि परानानन्दयति । अतः परमेश्वर एवानन्दमयः ॥

आनन्दप्रचुरः परमेश्वरः आनन्दमय इत्युक्तेऽपि ब्रह्मणोऽन्य एवायमिति गम्यते, 'ब्रह्म पुच्छं प्रतिष्ठा'* इति ब्रह्माधारत्वेनास्यावगमात् । परमेश्वरादन्यत्वाङ्गीकारे ब्रह्मणोऽस्वातन्त्र्यात् जगत्कारणत्वाद्यसंभवः । अतो जीवपक्ष एव समीचीन इत्यत आह—

## मान्त्रवर्णिकमेव च गीयते ॥ १६ ॥

यत् 'सत्यं ज्ञानमनन्तं ब्रह्म'† इति मन्त्रवर्णोदितं ब्रह्म, तदेव 'अन्योऽन्तर आत्माऽऽनन्दमयः'* इति आनन्दप्रचुरतया आनन्दमय इति गीयते । 'ब्रह्म पुच्छं प्रतिष्ठा'* इति ब्रह्मशब्दः प्रणववाचकः, तस्य परमेश्वरवाचकत्वादाधारत्वम् ॥

अत्र केचिदाहुः—परमाकाशरूपः प्रकृत्यात्मा आनन्दमय इति श्रूयते, न विश्वाधिकं निमित्तं परं ब्रह्म यत् 'सत्यं ज्ञानमनन्तं ब्रह्म'† इत्युच्यते । 'तस्माद्वा एतस्मादात्मन आकाशस्संभूतः'† इत्याकाशादिप्रपञ्चप्रकृतित्वेन श्रुत आनन्दमयः परमाकाशः । परमाकाशरूपत्वमस्य 'यदेष आकाश आनन्दो न स्यात्'‡ इत्यतोऽवगम्यते । 'ब्रह्म पुच्छं प्रतिष्ठा'* इति ब्रह्म आनन्दाकाशस्याधारत्वेनावगम्यते । अत एव 'स एको ब्रह्मण आनन्दः'§ इति ब्रह्माश्रितत्वेनावगम्यते । पुनरेष एव 'आनन्दो ब्रह्मेति व्यजानात्, आनन्दाद्ध्येव खल्विमानि भूतानि'¶ इत्यादिना सकलभूतप्रकृतित्वेन अभिधीयते । तत्र 'आनन्दो ब्रह्म' इत्यानन्दस्य ब्रह्मत्वव्यपदेशस्तु ब्रह्मधर्मत्वेन तदभेदात् 'संगा

* तै. २-५.  † तै. २-१.  ‡ तै. २-७.
§ तै. २-८.  ¶ तै. ३-६.

भार्गवी वारुणी विद्या, परमे व्योमन् प्रतिष्ठिता'* इति ब्रह्मधर्मस्वरूपे परमानन्दरूपे प्रपञ्चप्रकृतौ परमशक्तिपर्याये चिदात्मनि परमे व्योम्नि वारुणी विद्या समाप्तेत्युच्यते । ततो ब्रह्मधर्मस्वभावः प्रकृत्यात्मा परमाकाशरूपा परमशक्तिः आनन्दमय इत्युच्यते । तद्धर्मित्वेन प्रतिष्ठेत्युच्यते परं ब्रह्म । विज्ञानमयश्च तदुपासको जीवः । प्रतिष्ठाभूताद्धर्मिणः ब्रह्मणः धर्मभूतस्यानन्दमयस्य शक्त्यात्मनः भेदादर्शनादानन्दमय आत्मा ब्रह्मेत्यभिप्रायेण 'आनन्दमयोऽभ्यासात्' इति सूत्रकारेण सूत्रमवतारितमिति ॥

अन्ये पुनः—'अस्माल्लोकात्प्रेत्य, एतमन्नमयमात्मानमुपसंक्रम्य'† इत्यादावन्नमयादीनां प्रत्येकं चेतनवाचकात्मश्रुतिसंबन्धात् संसारलोकादुत्क्रान्तस्य मुक्तस्य क्रमप्राप्यत्वावगमाच्च एते सर्वथा अन्नमयादय आत्मानः पञ्च चेतना अन्नाद्यनुमितपञ्चभूताधिष्ठातारः कारणभूतपुरुषाः ब्रह्मविष्णुरुद्रेश्वरसदाशिवसंज्ञाः । अन्नमयाद्यात्माधारस्य सदाशिवस्यानन्दमयस्यापि कारणं परमशिवाख्यं ब्रह्म तत्प्रतिष्ठेत्युच्यते । तदभेदादानन्दमयस्य ब्रह्मत्वोपदेश इति सर्वथा आनन्दमयः परमेश्वर इति सिद्धम् ॥

---

## ७. अधिकरणम्.

ब्रह्मणः परमशिवस्य समन्वयसिद्धं जगत्कारणत्वादिकं लक्षणं प्रधानजीवयोर्न व्यभिचरतीति स्थापितम् । अतःपरं जीवसमष्टिरूपस्य हिरण्यगर्भस्य जगत्कारणत्वादिकं श्रूयते इत्यत आह—

### नेतरोऽनुपपत्तेः ॥ १७ ॥

---

*तै. ३-६. †तै. ३-१०.

यतः प्रसूता जगतः प्रसूती
　　तोयेन जीवान् व्यससर्ज भूम्याम् ।
यदोषधीभिः पुरुषान्पशूंश्च
　　विवेश भूतानि चराचराणि ॥*

इति श्रूयते महोपनिषदि अस्य विषयः ॥

अत्र सकलजगत्प्रसूत्यादिहेतुत्वेन श्रूयमाणः पुरुषः परमेश्वरः? उतान्यो वा? इति संशयः ॥

हिरण्यगर्भ इति पूर्वः पक्षः । कथम्? तल्लिङ्गात्—

एकार्णवे तु त्रैलोक्ये ब्रह्मा नारायणात्मकः ।
भोगिशय्यागतश्शेते त्रैलोक्यग्रासबृंहितः ॥

इति पुराणवचनाद्ब्रह्मणः समुद्रशायित्वमवगम्यते । तदिह श्रूयते तल्लिङ्गम्—'यमन्तस्समुद्रे कवयो वयन्ति'* इति । 'प्रजापतिश्चरतिगर्भे अन्तः'* इति सर्वोपक्रमे सर्वानुप्रविष्टतया अवगम्यते । उपसंहारे च 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्। दिवं च पृथिवीं च'* इत्यादिना तस्यैव कारणत्वमवगम्यते । तस्मादुपक्रमोपसंहारसिद्धस्य हिरण्यगर्भस्य अवान्तरवाक्यसिद्धसर्वधर्मोपपत्तिः । किञ्च—तत्प्रतिपादनप्रदेशान्तरोपसंहारश्च कृतः 'अद्भ्यस्संभूतो हिरण्यगर्भ इत्यष्टौ'* इति । 'अद्भ्यस्संभूतः' इत्यत्र प्रजापतिरेव प्रतिपाद्यः, 'प्रजापतिश्चरति गर्भे अन्तः, अजायमानो बहुधा विजायते'† इति दर्शनात्, 'हिरण्यगर्भस्समवर्तताग्रे'‡ इत्यत्रापि 'प्रजापतिर्वै हिरण्यगर्भः' इति श्रवणात् । ततो हिरण्यगर्भ एव जगत्प्रसूतिहेतुत्वान्निना प्रतिपाद्यते ॥

*महाना. १.　　† तै. आ. ३-१३.　　‡ तै. सं. ४-१-८.

इति प्राप्ते ब्रूमः—परमेश्वरादितरो भिन्नो हिरण्यगर्भोऽत्र न प्रतिपाद्यः, जगत्प्रसूतिहेतुत्वादीनां परमेश्वरधर्माणां तस्मिन्ननुपपत्तेः। 'यतः प्रसूता जगतः प्रसूती'* इत्यारभ्य जगत्प्रसूतिहेतोस्तस्य—

अतः परं नान्यदणीयसं हि परात्परं यन्महतो महान्तम्।
यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात्॥*

इत्यादिना सर्वोत्कृष्टत्वं तमसः प्रकृतिमण्डलात्परत्वं चावगम्यते। तदण्डान्तर्वर्तिनो हिरण्यगर्भस्य न संभवति। किञ्च 'य एतं विदुरमृतास्ते भवन्ति'* इति अस्य ज्ञानादमृतत्वं मुक्तिरभिधीयते। तत्र हिरण्यगर्भे संभवति; परमेश्वरस्य हि मुक्तिहेतुत्वं असाधारणं लिङ्गम्—

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति॥†

इति श्रवणात्॥

यदुक्तमुपक्रमोपसंहारसिद्ध इति, तदप्रयोजकम्—अनुपगत्या प्रजापतिधातृशब्दौ हिरण्यगर्भं विहाय प्रजानां पशूनां पतिं जगद्धारकं परमेश्वरमेव प्रतिपादयतः। 'अद्भ्यस्सम्भूतो हिरण्यगर्भः'* इत्युभयत्रापि परमेश्वर एव प्रतिपाद्यः। 'य ईशे अस्य द्विपदश्चतुष्पदः'‡ 'आदित्यवर्णं तमसः परस्तात्'§ इति विश्वेश्वरत्वविश्वातीतत्वलिङ्गात्। ततो जगत्कारणत्वादिना प्रजापतिशब्दवाच्यः परमेश्वरो न हिरण्यगर्भः॥

परमेश्वरेण हिरण्यगर्भस्याभेदात् जगत्कारणत्वमस्तीत्यत आह—

---

*महाना. १. †श्वे. ६-२०. ‡तै. सं. ४-१-८. §तै. आ. ३-१३.

## भेदव्यपदेशाच्च ॥ १८ ॥

अस्यां महोपनिषदि परमेश्वरहिरण्यगर्भयोः भेदो व्यपदिश्यते कारणकार्यत्वेन 'यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं पश्यत जायमानम्'* इति । अतो हिरण्यगर्भादेः सर्वप्रपञ्चस्य कारणत्वमीश्वरस्येति सिद्धम् ॥

पुनराशङ्क्याह—

## कामाच्च नानुमानापेक्षा ॥ १९ ॥

'प्रजापतिरकामयत प्रजाः सृजेयेति'† इति सर्वत्र श्रुतिषु संकल्पो हिरण्यगर्भस्य जगत्सृष्टौ श्रूयते । तथाऽपि तस्य जगत्कारणत्वे अनुमानापेक्षा युक्त्यपेक्षा नास्ति, तस्य कामस्यावान्तरसृष्टिविषयत्वात् । परमेश्वरस्यैव हिरण्यगर्भात्मना अवान्तरसृष्टिश्चेति वक्ष्यति—'संज्ञामूर्तिकॢप्तिस्तु त्रिवृत्कुर्वत उपदेशात्'‡ इति ॥

'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि'§ इति हिरण्यगर्भरूपेणात्मना प्रपञ्चानुप्रविष्टस्य परमेश्वरस्य नामरूपकर्तृत्वश्रवणात् अनयोरभेद एवाभ्युपेय इत्यत आह—

## अस्मिन्नस्य च तद्योगं शास्ति ॥ २० ॥

अस्मिन् उपनिषत्यन्त एव अस्य हिरण्यगर्भस्य तद्योगं तस्य परमेश्वरस्य शेषत्वसंबन्धं शास्ति मन्त्रभागः—'ब्रह्माधिपतिर्ब्रह्मणोधिपतिः'¶ इति । अतः परमेश्वर एव जगत्कारणम्, तच्छेषभूतो हिरण्यगर्भ इति सिद्धम् ॥

---

*महाना. १२.  †तै. सं. ३-१-१.  ‡ब्र. सू. २-४-२०.
§छा. ६-३.  ¶महाना. २१.

## ८. अधिकरणम्.

तदितःपूर्वैरधिकरणन्यायैः सर्वज्ञं नित्यतृप्तं अनादिबोधं स्वतन्त्रं अलुप्तशक्तिकं अनन्तशक्तिकं सकलजगदुभयकारणं समस्तोपनिषत्तन्त्रसमन्वयैकप्रतिपाद्यं स्वप्रकाशनिखिलप्रपञ्चविलक्षणाद्वितीयस्वभावं सच्चिदानन्दस्वरूपं संसारपाशविच्छेदकारणं चिदचिदर्थान्तरं शिवतत्त्वं परं ब्रह्मेति सिद्धम् । तस्य साधकानां संसारभेषजं मनस्समाधानयोग्यं किमपि रूपं प्रदर्शयितुं इदमधिकरणमारभ्यते—

### अन्तस्तद्धर्मोपदेशात् ॥ २१ ॥

'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी '* इति छान्दोग्ये श्रूयतेऽस्य विषयः ॥

अयमादित्यान्तर्वर्ती हिरण्मयः पुरुषः परमेश्वरो देवताविशेषो वेति संशयः ॥

एवं सति सर्वाधारस्य सर्वगतस्य परमेश्वरस्यादित्यान्तर्वर्तित्वं हिरण्मयरूपत्वं च न संभवति, स्वेच्छया रूपाङ्गीकारे त्रिलोचनत्वनियतं तदिह न विद्यते । 'पुण्डरीकमेवमक्षिणी '* इति लोचनद्वयमेव श्रूयते । अथ वा—स्वेच्छागृहीतोपि देहः संसारिणामिव परमेश्वरस्यापि दुःखमुत्पादयेदेव । स्वेच्छासंबन्धेऽपि पावकस्य दाहकत्वं हि स्वभावः । अतः परमेश्वरस्य शरीरसंबन्धो न युक्तः । तस्मादयं कश्चिद्देवताविशेष एव, न परमेश्वरः इति पूर्वपक्षन्यायः ॥

---

*छा. १-६.

सिद्धान्तस्तु—परमेश्वर एव । कुतः ? तद्धर्माणामुपदेशात् । 'स एष सर्वेषां लोकानामीष्टे सर्वेषां कामानाम्' 'तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः'* इत्यादिना प्रतिपादिताः सर्वलोककामेश्वरत्वसर्वपापराहित्यादयो धर्मा हि पारमेश्वराः,

> एको हि रुद्रो न द्वितीयाय तस्थुः
> य इमाँल्लोकानीशत ईशिनीभिः ॥†
> एको बहूनां यो विदधाति कामान्‡

इत्यादिश्रवणात् ॥

सर्वाधारस्य सर्वगतस्य आदित्यान्तर्वर्तित्वं न संभवतीति यदुक्तं तत्र न विरोधः, सर्वाधारः सर्वगतः परमेश्वरः साधकानुग्रहाय हिरण्मयं किमपि रूपं समास्थाय सवितृमण्डलमधिवसति । शरीरसंबन्धादस्मदादिवदीश्वरस्य न संसारदोषापत्तिः । श्रुतिरेव भगवती ह्यस्य शरीरसंबन्धं सर्वपापराहित्यं च प्रतिपादयति । वयं हि श्रुतिप्रामाण्यशरणा न युक्तिं बहु मन्महे । पावकोऽपि संबन्धात् न शक्तिमतां दाहकः । 'यथा कप्यासं पुण्डरीकमेवमक्षिणी'* इति त्रिलोचनस्य परमेश्वरस्य लोचनद्वयग्रहणं पुण्डरीकसादृश्यवर्णनार्थं, न तृतीयलोचनाभावद्योतनपरम् । तथा हि—त्रिपुत्रं ब्राह्मणं प्रति द्वौ पुत्रावस्याग्निकल्पावित्युक्ते द्विसंख्याग्रहणं न शेषपुत्रनिषेधपरं, किन्तु पुत्रद्वयस्याग्निसादृश्यपरम्, तद्वदत्रापि । कं उदकं रश्मिभिः पिबतीति कपिरादित्यः, तेनासितं विकसितं पुण्डरीकं यथा स्फुरति तथा परमेश्वरस्य लोचनद्वयम् । तृतीयलोचनं तु मुकुलितस्वभावं विकसितपुण्डरीकसदृशं न भवति, मुकुलितपुण्डरीकसदृशमित्यभिप्रायः ॥

---

*छा. १-६.　　　†श्वे. ३-२.　　　‡श्वे. ६-१३.

